कूश्माण्डैर्जुहुयाद्योऽपूत इव मन्येत यथास्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतस्सिञ्चति यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते यावदेनो दीक्षामुपैति दीक्षित एतैस्सततिं जुहोति संवत्सरन्दीक्षितो भवति संवत्सरा देवात्मानं पुनीते मासन्दीक्षितो भवति यो मास स्स संवत्सरस्संवत्सरा देवात्मानं पुनीते चतुर्विंशतिꣳरात्रीं दीक्षितो भवति चतुर्विंशतिरर्धमासास्संवत्सर स्संवत्सरा देवात्मानं पुनीते द्वादश रात्रीं दीक्षितो भवति द्वादश मासास्संवत्सरस्संवत्सरादेवात्मानं पुनीते षड्रात्रीं दीक्षितो भवति षड्वा ऋतव स्संवत्सरस्संवत्सरादेवात्मानं पुनीते तिस्रोरात्रीर्दीक्षितो भवति त्रिपदा गायत्री गायत्रिया एवात्मानं पुनीते नमाꣳसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात्पयो ब्राह्मणस्य व्रत ꣳ यवागू राजन्यस्यामिक्षा वैश्य-स्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयाद्यदि मन्येतोपदस्यामी त्योदनन्धानास्सक्तून् घृतमित्यनुव्रतये दात्मनोऽनुपदासाय ॥ इति ॥

## अथ जमदग्निप्रोक्त कूश्माण्डहोमविधिः

अथातः संप्रवक्ष्यामि कूश्माण्डविधिमुत्तमम् ।
एनसांस्थूलसूक्ष्माणां प्रायश्चित्तं तु वैदिकम् ॥
अकुर्वन् विहितं कर्म निन्दितंच समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्ती भवेद्द्विजः ॥
केशश्मश्रुवापयित्वा स्नात्वा पुण्यजलाशये ।
प्रतिष्ठाप्य तथैवाग्निं स्वगृह्योक्तविधानतः ॥
आज्यभागानन्तरन्तु कूश्माण्डैर्जुहुयाद्द्विजः ।
"यद्देवा" द्यनुवाकैस्तु त्रिभिर्हुत्वाऽऽज्यमन्वहम् ॥
"वैश्वानुरा" नुवाकेन तमग्निमुपतिष्ठते ।
"यदित्याधाय समिधं जयादि प्रतिपद्यते ॥
कर्मादिष्वेव जुहुयात् पूतःस्वर्गं समश्नुते ।
संवत्सरं ब्रह्महा तु मासं वै वीरहा द्विजः ॥
चतुर्विंशतिरात्रीस्तु परिवेत्ता तु दीक्षितः ।
द्वादश त्वग्रदिधिषुः षड्रात्रीः श्यावदन्नपि ॥
तिस्रो रात्रीस्तु कुनखी दीक्षितोभवतिद्विजः ।
न मांसमन्नमश्नीयात् नोपेयात् कामिनीमपि ॥
नोपर्यासीत खट्वायां जुगुप्सेतानृताद्द्विजः ।
पयो व्रतं ब्राह्मणस्य यवागूः क्षत्रियस्य च ॥
आमिक्षा चैव वैश्यस्य प्रायश्चित्तार्थमिष्यते ।
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः ॥
सर्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमिष्यते ॥ इति ॥

## ॥ अथ बोधायनोक्त कूश्मण्डहोमविधिः ॥

(1) अथ कूश्माण्डै र्जुहुयाद्योऽपूत इवमन्येत । (2) यथास्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतस्सिञ्चति । (3) यदर्वाचीनमेनो भ्रूणहत्याया स्तस्मान्मुच्यत इति । (4) अयोनौ रेतस्सिक्त्वाऽन्यत्र स्वप्नात् । (5) अरेपावा पवित्रकामोवा । (6) अमावास्यायां पौर्णीमास्यां वा केशश्मश्रुलोमनखानि वापयित्वा ब्रह्मचारिकल्पेन व्रतमुपैति । (7) संवत्सरं चतुर्विंशत्यहो द्वादश रात्रीः षट् तिस्रो वा । (8) न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात् । (9) पयोभक्ष इति प्रथमः कल्पः । (10) यावकं वोपयुञ्जानः कृच्छ्रद्वादशरात्रञ्चरेत् भिक्षेद्वा तद्विधिषु यवागूं राजन्यो वैश्य आमिक्षाम् । (11) पूर्वाह्णे पाकयज्ञधर्मेणाग्निमुपसमाधाय सम्परिस्तीर्य आग्निमुखात्कृत्वा "यद्देवा देवहेळनं" "यददीव्यन्नृणं" "आयुष्टे विश्वतो दधत्" इत्येतैस्त्रिभिरनुवाकैः प्रत्यृचमाज्यस्यहुत्वा "सिꣳहेव्याघ्र" इति चतस्रस्स्रुवाहुतीर्जुहोति "अग्नेऽभ्यावर्तिन्" "अग्ने अङ्गिरः "पुनरूर्जा" "सहरय्या" इति चतस्रोऽभ्याववर्तिनीर्हुत्वा समित्पाणिर्यजमानलोकेऽवस्थाय "वैश्वानराय प्रतिवेदयाम" इति द्वादशर्चेन सूक्तेनोपस्थाय "यन्मेमनसावाचा+ यथातथ"ꣳस्वाहेति समिधमाधाय वरं ददाति । (12) जयादि प्रभृति सिद्धमाधेनुवरप्रदानात् । (13) एक एवाग्नौ परिचर्यायाम् (14) अग्न्याधेये "यद्देवा" "यददीव्यन्" "आयुष्टे" इति पूर्णाहुतिम् । (15) हुत्वाऽग्निहोत्रमारप्स्यमानो दशहोत्रा हुत्वा दर्शपूर्णमासावारप्स्यमानश्चतुर्होत्रा हुत्वा चातुर्मास्यान्यारप्स्यमानः पञ्चहोत्रा हुत्वा पशुबन्धेन षड्ढोत्रा सोमे सप्तहोत्रा (16) विज्ञायते

कर्मादिष्वेतैर्जुहुयात् पूतोदेवलोकान् समश्नुत इति हि ब्राह्मणं इति हि ब्राह्मणम् ॥ इति ॥

## ॥ अथ कर्मविपाकोक्त कूश्माण्डहोमविधिः ॥

अथ कूश्माण्डहोमविधिः मन्त्रपाठानुक्रमसहितः प्रदर्श्यते । तत्रैको जमदग्निप्रोक्तः पक्कहोमादिरहितः लघुकल्पः प्रदर्शितः । अपरश्च पक्कहोमादिसहितो गुरुकल्पः बोधायनप्रोक्तो निरूपितः । सर्वशाखाधिकरणन्यायेन बहुभिर्निरूपितः कूश्माण्डहोमः एक एवेति गुणोपसह्मारन्यायेनाविरुद्धसकलाङ्गोपसह्मारः कर्तव्यः । अथवा "एनसि गुरुणि गुरूणि लघुनि लघूनि" इति गौतमस्मरणात् अपनोद्यपापाल्पत्वे लघुपक्षः स्वीकार्यः इतरथा गुरुपक्षादर इति व्यवस्था । यो महापातकादिदूषितः कृतप्रायश्चित्तोऽपि मनः परितोषं न प्रतिपद्यते, यश्चार्यः अगम्यायां अयोनौवा रेतस्सिञ्चति, यश्च ब्रह्महत्यावर्जं साक्षात् द्वादशवार्षिकादिगुरुप्रायश्चित्तानामविषयाणि महापातकानि करोति, योऽपि पवित्रकामः स कूश्माण्डहोमं कुर्वीत । यश्चाधानादि कर्म चिकीर्षति सोऽपि कर्मादिषु कूश्माण्डीभिर्जुहुयात् इति ॥

## अथ कूश्माण्डहोमोपक्रमप्रकारः ॥

अमावास्यायां पौर्णमास्यां अन्यत्रवा विहितकाले कूश्माण्डैर्होष्यन् यजमानः प्रातस्स्नानसन्ध्योपासनगायत्रीजपौपासनानि (नित्य कर्माणि) कृत्वा होमारम्भात् पूर्वं केशश्मश्रुलोमनखानि वापयित्वा धौतवस्त्रपुण्ड्रयज्ञोपवीतधारण पुण्याहवाचन तत्तीर्थप्रोक्षणनिषेवणानि

कुर्यात् । अथ, अनुज्ञा विघ्नेश्वर पूजा होमसङ्कल्प ग्रहप्रीणन अभ्युदय तदङ्गपुण्याहवाचन पुरस्सरं कूश्माण्डैर्जुहुयात् । तत्र विहितेषु संवत्सर मास चतुर्विंशत्यह द्वादशाह षडह त्र्यह दीक्षापक्षेषु एनसां तारतम्येनान्यतमः पक्षः आश्रयणीयः । तथा बहुभिर्दिवसैः कूश्माण्डहोमकरणे प्रथमदिवसे शुभे+प्रीत्यर्थं भ्रूणहत्याया अर्वाचां एनसां निर्हरणार्थं संवत्सरं मासं चतुर्विंशतिं रात्रीः द्वादश रात्रीः षड्रात्रीः तिस्रोरात्रीर्वा (यथासम्भवमुक्त्वा) कूश्माण्डैर्होष्ये इति सङ्कल्पः कार्यः । द्वितीयादिदिवसे तु शुभे+प्रीत्यर्थं . . एनसांनिर्हरणार्थं उद्दिष्टदीक्षापक्षानुसारेण, कूश्माण्डैर्होष्ये इत्येवालम् । किंच द्वितीयादि-दिवसे वापननूतनयज्ञोपवीतधारण शुद्ध्यर्थपुण्याहवाचन होमानुज्ञा विघ्नेश्वरपूजा निर्दिष्टविशेषसङ्कल्प अभ्युदय तदङ्गपुण्याहवाचनानि वर्ज-यित्वा उक्तसामान्यसङ्कल्पपुरस्सरं अन्यत् कर्मजातं आरम्भदि-वसवत् समाचरेत् ॥

अन्यच्च एनोनिवृत्तिं अपूतत्वशङ्कानिवृत्तिं श्रौतस्मार्तकर्माधि-कारसिद्धिंवा उद्दिश्य पूतत्वासिद्ध्यर्थं क्रियमाणोऽयं कूश्माण्डहोमः सर्वथा सङ्गवकाले धार्ये औपासनाग्नौ कार्यः । दैवादौपासनस्य विच्छित्तौ पूर्वदिवसे होमारम्भदिवसेवा प्रातः स्नानसन्ध्योपासनान-न्तरं अग्निसन्धानमौपासनञ्च कृत्वा तदग्नौ स्वगृह्योक्तविधिना कार्यः । एवञ्च उपनयनविवाहादिषु देवपितृकार्यादिषु आधानादिषु वा अयं होमः पूतत्वाय कर्तव्य इति सिद्ध्यति ॥

कूश्माण्डहोमार्थं पठितानि "यद्देवा देवहेळनं" इत्यादीनि सूक्तानि कूश्माण्डानि इत्यभिधीयन्ते "तेऽनुप्रविशुः कूश्माण्डानि" "तएतानि सूक्तान्यपश्यन्" इत्यादिश्रुतेः । कूश्मितं प्रकम्पितं प्रतापितं वा अण्डं ब्रह्माण्डं येषां तेजसा तानि कूश्माण्डानि सूक्तानीत्यर्थः ॥

## ॥ अथ कूश्माण्डहोमप्रयोगः ॥

यजमानः पत्न्यासह ब्राह्मणान् अनुज्ञापयेत् ॥ आदौ-द्विराचम्य "ऋध्यास्म हव्यैर्नमसोपसद्य । मित्रन्देवं मित्रधेयन्नो अस्तु । अनूराधान् हविषा वर्धयन्तः । शतञ्जीवेम शरदस्सवीराः ॥" इति यजमानः स्वयं वदन् आचार्यानुगृहीतं पवित्रं धृत्वा "ओम् नमस्सदसे-नमस्सदसः-पतये - नमस्सखीनां - पुरोगाणां - चक्षुषे - नमोदिवे - नमः पृथिव्यै" ॥ "सप्रथ - सभां मे - गोपाय । येचसभ्याः-सभासदः । तान्-इन्द्रियावतः कुरु । सर्वमायुः-उपासताम्" ॥

सर्वेभ्यो ब्राह्मणेभ्योनमः, इति नमस्कृत्य दक्षिणाताम्बूलं गृहीत्वा अशेषे हे परिषत् भवत्पादमूले मया समर्पितां इमांसौवर्णीं दक्षिणां किञ्चिदपि यथोक्तदक्षिणामिव ताम्बूलञ्च स्वीकृत्य (ब्राह्मणेभ्यो दक्षिणा दिकं दत्वा)....नक्षत्रे....राशौ जातस्य....शर्मणः मम.... नक्षत्रे..राशौ जातायाः....नाम्न्याः मम धर्मपत्न्याश्च आवयोः जन्मप्रभृति एतत्क्षणपर्यन्तं भ्रूणहत्याया अर्वाञ्चि यावन्त्येनांसि सम्भावितानि तावतां सर्वेषां एनसां निर्हरणार्थं संवत्सर मास चतुर्विंशत्यह द्वादशाह षडह त्र्यह दीक्षापक्षेषु....अन्यतमं पक्षमाश्रित्य अथवा सकृत् कूश्माण्डै र्होतुं योग्यतासिद्धिरस्त्विति भवत्यनुगृहाण । (योग्यतासिद्धिरस्तु इति ब्राह्मण प्रतिवचनम्) इति ब्राह्मणाननुज्ञाप्य

[1]विघ्नेश्वरं सम्पूज्य, दर्भेष्वासीनः दर्भान् धारयमाणः पत्न्या दर्भै रन्वारब्धः सङ्कल्पं कुर्यात् । शुक्लाम्बरधरं+शान्तये ॥ ओम् भूः+. सुवरोम् । शुभे+शुभतिथौ ममोपात्त+प्रीत्यर्थं आवयोः जन्मप्रभृति जन्माभ्यासात् एतत्क्षणपर्यन्तं भ्रूणहत्याया अर्वाक्वि यावन्त्येनांसि सम्भावितानि तावतां सर्वेषामेनसां निर्हरणार्थं संवत्सर मास चतुर्विंशत्यह द्वादशाह षडह त्र्यह दीक्षापक्षेषु.... अन्यतमं.पक्षमाश्रित्य अथवा सकृत् कूश्माण्डैर्होष्ये इति सङ्कल्प्य पत्न्यर्थं पुनः प्राणानायम्य पत्नीं पूर्ववत् सङ्कल्पयित्वा उत्तरतो दर्भान्निरस्य अप उपस्पृश्य पत्नीञ्च अप उपस्पर्शयित्वा “गणानांत्वा+सीदसादनम्” अस्मात् हरिद्राबिम्बात् आवाहितं महागणपतिं यथास्थानं प्रतिष्ठापयामि इति विघ्नेश्वरमुद्वास्य तत्प्रसादं शिरसा गृह्णीयात् ॥

अथ [2]गृहप्रीतिं [3]अभ्युदयं तदङ्ग[4]पुण्याहवाचनञ्च कृत्वा (औपासनाग्निः अन्यत्र रक्षितश्चेत्) शुचौदेशे स्थण्डिले दक्षिणतः प्राचीस्तिस्रः पश्चिमतः उदीचीश्च तिस्रोलेखाः उल्लिख्य शकलं निधाय सशेषमद्भिः अवोक्ष्य शकलं नैरृत्यां निरस्य अप उपस्पृश्य “भूर्भुव-स्सुवरोम्” इति रक्षितमग्निं प्रतिष्ठाप्य अवोक्षणतोयशेषं प्रागुत्सिच्य प्राक्तोयमन्यन्निधाय (औपासनाग्निः पूर्वं स्यण्डिल एव निहितश्चेत् तं) अग्निमिध्वा प्रागग्रैः उदगग्रैश्च दर्भैः अग्निं, पुरस्तात् दक्षिणतः पश्चात्

---

1. 21வது பக்கத்தில் பார்க்கவும்
2. 23வது பக்கத்தில் பார்க்கவும்
3. 23வது பக்கத்தில் பார்க்கவும்
4. 24வது பக்கத்தில் பார்க்கவும்.

उत्तरतः परिस्तीर्य दक्षिणानुत्तरान् उत्तरानधरांश्च कृत्वा अग्ने-रुत्तरतः दर्भान् संस्तीर्य तेषु द्वन्द्वं न्यञ्चि पात्राणि-दर्व्याज्यस्थाल्यौ, प्रोक्षणीप्रणीतापात्रे, इध्मेतरदर्व्यौ च-सादयित्वा (पवित्रयोस्संस्कारः) समौ साग्रौ दर्भौ तृणं काष्ठंवाऽन्तर्धाय छित्वा प्रादेशमात्रे पवित्रे कृत्वा अप उपस्पृश्य अद्भिरनुमृज्य सपवित्रेण पाणिना पात्राणि संमृश्य, (प्रोक्षणीसंस्कारः) अग्नेः पश्चात् उदगग्रान् दर्भान् संस्तीर्य तेषु प्रोक्षणीपात्रं निधाय अक्षतैस्सह अप आसिच्य उदगग्राभ्यां पवित्राभ्यां प्राचीः त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मञ्च विस्रस्य सपवित्रेण उत्तानपाणिना पात्राणि सर्वाभिरद्भिः त्रिः प्रोक्ष्य प्रोक्षणीपात्रं दक्षिणतो निधाय (प्रणीतासंस्कारः) प्रणीतापात्र-मादाय अग्नेः पश्चात् दर्भेषु निधाय तस्मिन्नप आनीय उदगग्राभ्यां पवित्राभ्यां ता अपः त्रिरुत्पूय समं प्राणैर्हृत्वा उत्तरेणाग्निं पृथग्दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य वरुणाय नमः सकलाराधनैः स्वर्चितम् इत्यभ्यर्च्य ब्राह्मणं दक्षिणतो दर्भेषु निषाद्य अस्मिन् कूश्माण्डहो-मकर्मणि ब्रह्माणं त्वां वृणे ब्रह्मणे नमः सकलाराधनैः स्वर्चि-तम् इत्यभ्यर्च्य (आज्यसंस्कारः) आज्यं विलाप्य अग्नेः पश्चा-दाज्यस्थालीं निधाय तस्यामाज्यं निरुप्य उदीचोऽङ्गारान् परिस्तरणा द्बहिः उदीच्यां निरूह्य तेष्वाज्यमधिश्रित्य ज्वलता तृणेनावद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य त्रिः पर्यग्निकृत्वा उदगुद्वास्य अङ्गारानग्नौ प्रत्यूह्य अग्नेः पश्चात् दर्भेष्वाज्यस्थालीं निधाय उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रे (पवित्रग्रन्थिं विस्रस्य, अप उपस्पृश्य) प्रागग्रमग्नौ प्रहरति । (दर्वीसंस्कारः) येन जुहोति तदग्नौ प्रतितप्य दर्वीद्वयं दर्भैस्संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भानद्भिः संस्पर्श्य अग्नौ प्रहरति ॥

अथ परिधीन् परिदधाति—अग्नेः पश्चात् स्थविष्ठो मध्यमः (उदगग्रः परिधिः) अणीयान् द्राघीयान् दक्षिणार्ध्यः (प्रागग्रः परिधिः)। अणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः (प्रागग्रः परिधिः) एतान् परिधीन् अन्योन्य-संसृष्टान् कृत्वा द्वे आघारसमिधौ मध्यमं परिधिमुपस्पृश्य ऊर्ध्वे दक्षिणत उत्तरतश्च अग्नावादधाति ॥

अथाग्निं परिषिञ्चति—अदितेऽनुमन्यस्व, (दक्षिणतः प्राचीनम्) अनुमतेऽनुमन्यस्व, (पश्चादुदीचीनम्) सरस्वतेऽनुमन्यस्व, (उत्तरतः प्राचीनम्) देव सवितः प्रसुव, इति समन्तं परिषिच्य इध्ममाज्ये-नाभ्यज्य अस्मिन् कूश्माण्डहोमकर्मणि ब्रह्मन् इध्ममाधास्ये इति ब्रह्माणं पृष्ट्वा (ओम् आधत्स्व) इति ब्रह्मणा प्रत्युक्ते इध्ममग्नावादध्यात् ॥

अथाघारावाघारयति—प्रजापतिं मनसा ध्यायन् इतरदर्व्या जुहो-ति-वायव्यादाग्नेयान्तं, स्वाहा-प्रजापतय इदं न मम । प्रधानदर्व्या जुहोति-नैरृतादैशानान्तं, स्वाहा-इन्द्रायेदं न मम ॥ अथाज्यभागौ यजति—*(வடபாகத்தில்)* "अग्नयेस्वाहा"-अग्नय इदं न मम । *(தென்பாகத்தில்)* "सोमाय स्वाहा"-सोमायेदं न मम ।[1] सङ्कल्पप्रभृति मध्ये सम्भावितसमस्तदोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि *(நடுவில்)* "ओम् भूर्भुवस्सुवस्स्वाहा"-प्रजापतय इदं न मम ॥—

---

1. अथात्र चरुहोमपक्षे-(मध्ये) "अग्नये स्वाहा" अग्नय इदं न मम । सङ्कल्पप्रभृति एतत्क्षणपर्यन्तं मध्ये सम्भावितसमस्त-

## अथ कूश्माण्डहोममन्त्राः

ओम् यद्देवाः, देवहेळनं, देवासः, चकृमावयम् । आदित्याः, तस्मान्मा, मुञ्चत, ऋतस्यर्तेन, मामितस्वाहा ॥ देवेभ्यः आदित्येभ्यः इदं नमम ॥ देवाः, जीवनकाम्याः, यद्वाचा, अनृतमूदिम । तस्मान्नः, इहमुञ्चत, विश्वेदेवाः, सजोषसः, स्वाहा ॥ विश्वेभ्यो देवेभ्यः इदं नमम ॥ ऋतेन, द्यावापृथिवी, ऋतेन त्वं, सरस्वति ।

---

दोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि—"ओम् भूर्भुवस्सुवस्स्वाहा" प्रजापतय इदं न मम । चरुं श्रपयित्वा अभिघार्य उदीचीनमुद्वास्य प्रतिष्ठितमभिघार्य प्रधानदर्व्यामुपस्तीर्य चरुं द्विरवदाय (पञ्चावत्तिनां त्रिः) सकृदभिघार्य "ओम् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयादोम् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात्स्वाहा-देवाय सवित्र इदं न मम । पुनः पूर्ववत् दर्व्यामुपस्तीर्य सकृदवदाय (पञ्चावत्तिनांद्विः) अन्तः परिधि सादयित्वा "यद्देवाः" इत्यादिमन्त्रैः आज्याहुतयः कार्याः ॥

कृतान्नैः, पाहि, एर्नसः, यत्किञ्च, अनृतमूदिम, स्वाहा ॥
द्यावापृथिवीभ्यां सरस्वत्यै इदं नमम ॥ इन्द्राग्नी, मित्रावरुणौ, सोमो
धाता, बृहस्पतिः । तेनोमुञ्चन्तु, एर्नसः, यदन्यकृतं, आरिम स्वाहा ॥
इन्द्राग्निभ्यां मित्रावरुणभ्यां सोमाय धात्रे बृहस्पतये इदं नमम ॥
सजातशꣳसात्, उत जामि, शꣳसात्, ज्यायसः, शꣳसात्,
उतवा, कनीयसः । अनाधृष्टं, देवकृतं, यदेर्नः, तस्मात्त्वं,
अस्माञ्जातवेदः, ममुग्धि स्वाहा ॥ अग्नये जातवेदसे इदं नमम ॥
यद्वाचा, यन्मनसा, बाहुभ्यां, ऊरुभ्यां, अष्ठीवद्भ्यां, शिश्नैः,
यदनृतं, चकृमावयम । अग्निर्मा तस्मात्, एर्नसः, गारहपत्यः,
प्रमुञ्चतु, चकृमयानि, दुष्कृता स्वाहा ॥ अग्नयेगार्हपत्याय
इदं नमम ॥ येनत्रितः, अर्णवात्, निर्बभूव, येनसूर्यं, तमसः,
निर्मुमोच । येनेन्द्रः, विश्वाः, अजहात्, अरातीः, तेनाहं, ज्योतिषा
ज्योतिः, आनशानः, आक्षि स्वाहा ॥ अग्नये ज्योतिषे इदं नमम ॥
यत् कुसीदं, अप्रतीत्तं, मयेहयेन, यमस्य निधिना, चरामि ।

एतत्, तदॅग्ने, अनृणः, भवामि, जीवॅन्नेव, प्रतितत्तें, दधामि स्वाहा ॥ अग्नये इदं नमम ॥ यन्मयिमाता, गर्भेसति । एनश्चकार, यत् पिता ॥ अग्निर्मा तस्मात्, एनॅसः, गार्हॅपत्यः, प्रमुञ्चतु, दुरिता यानि, चकृम, करोतुमां, अनेनसं, स्वाहा ॥ अग्नये गार्हपत्याय इदं नमम ॥ यदॉपिपेषॅ, मातरं पितरं, पुत्रः प्रमुदितः, धयन् । अहिँसितौ, पितरौ, मयातत्, तदॅग्ने, अनृणः, भवामि स्वाहा ॥ अग्नये इदंनमम ॥ यदन्तरिक्षं, पृथिवीं, उतद्यां, यन्मातरं, पितरंवा, जिहिँसिम । अग्निर्मा, तस्मादेनॅसः, गार्हॅपत्यः, प्रमुञ्चतु, दुरितायानि, चकृम, करोतुमां, अनेनसं, स्वाहा ॥ अग्नये गार्हपत्याय इदं नमम ॥ यदाशसा, निशसा, यत्पॅराशसा । यदेनॅः, चकृमानूतॅनं, यत्पुराणम् । अग्निर्मा तस्मात्, एनॅसः, गार्हॅपत्यः, प्रमुञ्चतु, दुरिता यानि, चकृम, करोतुमां, अनेनसं, स्वाहा ॥ अग्नये गार्हपत्याय इदं नमम ॥ अतिक्रामामि, दुरितं, यदेनॅः, जहॉमिरिप्रं, परमे, सधस्थे ।

यत्रयन्ति, सुकृतः, नापि दुष्कृतः । तमारोहामि, सुकृतान्नु, लोकं, स्वाहा ॥ अग्नये इदं न मम ॥ त्रिते देवाः, अमृजत, एतदेनः, त्रित एतत्, मनुष्येषु, मामृजे । ततोमायदि, किञ्चिदानशे । अग्निर्मा तस्मात्, एनसः, गार्हपत्यः, प्रमुञ्चतु, दुरिता यानि, चकृम, करोतुमां, अनेनसं, स्वाहा ॥ अग्नये गार्हपत्याय इदं नमम ॥ दिविजाताः, अप्सु जाताः, याजाताः, ओषधीभ्यः । अथोयाः, अग्निजा आपः, तानश्शुन्धन्तु, शुन्धनीः, स्वाहा ॥ अद्भ्यः शुन्धनीभ्यः इदं नमम ॥ यदापो नक्तं, दुरित ञ्चराम, यद्वा दिवा, नूतनं, यत्पुराणम् । हिरण्यवर्णाः, ततः, उत्पुनीतनः, स्वाहा ॥ अद्भ्यो हिरण्य-वर्णाभ्यः इदं नमम ॥ इमं मे वरुण, श्रुधीहवं, अद्याच मृळय । त्वाम-वस्युः, आचके स्वाहा ॥ वरुणाय इदं नमम ॥ तत्त्वायामि, ब्रह्मणा, वन्दमानः, तदाशास्ते, यजमानः, हविर्भिः । अहेळमानः, वरुणेह, बोधि, उरुशंस, मानआयुः, प्रमोषीः, स्वाहा ॥ वरुणाय इदं नमम ॥ त्वन्नो अग्ने, वरुणस्य विद्वान्, देवस्य हेळः, अव यासिसीष्ठाः ।

यजिष्ठः, वह्नितमः, शोशुचानः, विश्वा द्वेषांसि, प्रमुमुग्धि, अस्मत् स्वाहा ॥ अग्नये इदं नमम ॥ स त्वन्नो अग्ने, अवमोभव, ऊती नेदिष्ठः, अस्या उषसः, व्युष्टौ । अवयक्ष्व नः, वरुणं, रराणः, वीहि मृळीकं, सुहवोनः, एधि स्वाहा । अग्नये इदं नमम ॥ त्वमग्ने अयासि, अयासन्, मनसा हितः । अयासन्, हव्यमूहिषे, अयानो धेहि, भेषजं, स्वाहा ॥ अग्नये अयसे इदं नमम ॥ यददीव्यन्, ऋणमहं, बभूव, अदित्सन्वा, सञ्जगर, जनेभ्यः । अग्निर्मा तस्मात्, इन्द्रश्च, संविदानौ, प्रमुञ्चतां, स्वाहा ॥ अग्नीन्द्राभ्यां इदं नमम ॥ यद्धस्ताभ्यां, चकर, किल्बिषाणि, अक्षाणां, वग्नुं, उपजिघ्नमानः । उग्रंपश्याच, राष्ट्रभृच्च, तान्यप्सरसौ, अनुदत्तां, ऋणानि स्वाहा ॥ उग्रंपश्याराष्ट्रभृद्भ्यां अप्सरोभ्यां इदं नमम ॥ उग्रंपश्ये, राष्ट्रभृत्, किल्बिषाणि, यदक्षवृत्तं, अनुदत्तमेतत् । नेन्नः, ऋणान्, ऋणवः, इत्समानः, यमस्य लोके, अधिरज्जुराय, स्वाहा ॥ उग्रंपश्याराष्ट्रभृद्भ्यां अप्सरोभ्यां इदं नमम ॥ अवते, हळो वरुण, नमोभिः,

अवयज्ञेभिः, ईमहे, हविर्भिः । क्षयन्, अस्मभ्यं, असुर प्रचेतः, राजन्, एनांसि, शिश्रथः, कृतानि, स्वाहा ॥ वरुणाय (असुराय प्रचेतसे राज्ञे) इदं नमम ॥ उदुत्तमं, वरुण पाशं, अस्मत्, अवाधमं, विमध्यमं, श्रथाय । अथावयं, आदित्य व्रते, तवानागसः, अदितये स्याम, स्वाहा ॥ वरुणादित्याभ्यां इदं नमम ॥ इमं मे वरुण, श्रुधीहवं, अद्याच मृळय । त्वामवस्युः, आचके स्वाहा ॥ वरुणाय इदं नमम ॥ तत्वायामि, ब्रह्मणा वन्दमानः, तदाशास्ते, यजमानः, हविर्भिः ॥ अहेळमानः, वरुणेहबोधि, उरुशंस, मान आयुः, प्रमोषी स्स्वाहा ॥ वरुणाय इदं नमम ॥ त्वन्नोअग्ने, वरुणस्य विद्वान्, देवस्य हेळः, अवयासिसीष्ठाः । यजिष्ठः, वह्नितमः, शोशुचानः, विश्वा द्वेषांसि, प्रमुमुग्धि, अस्मत्स्वाहा ॥ **अग्नये** इदं नमम ॥ स त्वन्नो अग्ने, अवमोभव, ऊती नेदिष्ठः, अस्या उषसः, व्युष्टौ । अवयक्ष्वनः, वरुणं, ररोणः, वीहिमृळीकं, सुहवोनः, एधि स्वाहा ॥ ६ **अग्नये** इदं नमम ॥

सङ्कुॅसुकः, विकुॅसुकः, निरृऋथः, यश्चॅ निस्वनः। ते(१)ऽस्मत्, यक्ष्मं, अनॅागसः, दूराद्दूरं, अचीचतं, स्वाहा ॥ अनागोभ्यः देवेभ्यः इदं नमम॥ निर्यक्ष्मं, अचीचते, कृत्यां, निरृॅतिञ्च। तेन यः, अस्मत्, समॅृच्छातै, तमॅस्मै, प्रसुॅवामसि, स्वाहा।(अनागोभ्यः)देवेभ्यः इदं न मम॥दुश्श॰सा-नुश॰साभ्यां, घणेनॅ, अनुघणेनॅच। तेनान्यः, अस्मत्, समॅृच्छातै,तमॅस्मै, प्रसुॅवामसि, स्वाहा ॥ (अनागोभ्यः) देवेभ्यः इदं न मम ॥ संवर्चॅसा, पयॅसा, सन्तनूॅभिः, अगॅन्महि, मनॅसा, स॰शिवेनॅ । त्वष्टॅा नो अत्रॅ, विदॅधातु, रायोऽनुॅमार्ष्टु, तन्वः, यद्विलिॅष्टं, स्वाहा ॥ त्वष्ट्रे इद नमम ॥ आयुॅष्टे, विश्वतॅा दधत्, अयमग्निः, वरॅेण्यः । पुनॅस्ते प्राणः, आयॅाति, परायक्ष्मं, सुवामिते, स्वाहा ॥ अग्नये वरेण्याय इदं नमम ॥ आयुर्दा ॲग्ने, हविषॅो जुषाणः, घृतप्रॅतीकः, घृतयॅोनिः, एधि । घृतं पीत्वा, मधुॅ, चारु गव्यं, पितेवॅ पुत्रं, अभिरॅक्षतात्, इमम्, स्वाहा ॥ आयुर्दे अग्नये (हविषो जुषाणाय घृतप्रतीकाय घृतयोनये) इदं नमम ॥ इमॅमॅग्ने, आयुॅषे, वर्चॅसे कृधि, तिग्ममोजॅः, वरुण, स॰शिॅशाधि,

मातेवास्मै, अदिते, शर्म यच्छ, विश्वे देवाः, जरदष्टिः, यथासत्, स्वाहा ॥ अग्नये वरुणायादितये विश्वेभ्यो देवेभ्यः इदं नमम ॥ अग्न आयूंषि, पवसे, आसुवोर्जं, इषञ्च नः । आरे बाधस्व, दुच्छुनां, स्वाहा ॥ अग्नये इदं नमम ॥ अग्नेपवस्व, स्वपाअस्मे, वर्चस्सुवीर्यम् । दधद्रयिं, मयिपोषं, स्वाहा ॥ अग्नये स्वपसे इदं नमम ॥ अग्निर्-ऋषिः, पवमानः, पाञ्चजन्यः, पुरोहितः । तमीमहे, महागयं, स्वाहा ॥ अग्नये(ऋषये पवमानाय पाञ्चजन्याय पुरोहिताय)इदं नमम ॥ अग्नेजातान्, प्रणुदानः, सपत्नान्, प्रत्यजातान्, जातवेदः, नुदस्व । अस्मेदीदिहि, सुमनाः,अहेळन्, शर्मन्ते स्याम,त्रिवरूथः,उद्भौ स्वाहा॥अग्नये जातवेदसे इदं नमम॥सहसा जातान्, प्रणुदानः, सपत्नान्, प्रत्यजातान्, जातवेदः, नुदस्व । अधिनो ब्रूहि, सुमनस्यमानः, वयंस्याम, प्रणुदानः, सपत्नान्, स्वाहा ॥ अग्नये जातवेदसे (सुमनस्यमानाय) इदं नमम ॥ अग्नेयोनः, अभितोजनः,वृकोवारः,जिघांसति । तांस्त्वं वृत्रहन्, जहि,वस्वस्मभ्यं, आभर स्वाहा॥ अग्नये वृत्रघ्ने इदं नमम॥ अग्ने योनः, अभिदासति,

समानः, यश्च निष्ट्यः । तं वयं, समिधं कृत्वा, तुभ्यमग्ने, अपिदध्मसि, स्वाहा ॥ अग्नये इदं नमम ॥ यो न श्शपात्, अशपतः, यश्चनः, शपतः, शपात् । उषाश्च, तस्मै निम्रुक्च, सर्वं पापं, समूहतां, स्वाहा ॥ उषोनिम्रुग्भ्यां इदं नमम । यो नः स्सपत्नः, योरणः, मर्तः, अभिदासति देवाः । इध्मस्येव, प्रक्षायतः, मा तस्य, उच्छेषि, किञ्चन स्वाहा ॥ देवेभ्यः इदं नमम ॥ योमान्द्वेष्टि, जातवेदः, यञ्चाहं द्वेष्मि, यश्चमाम् । सर्वान्, तानग्ने, सन्दह, याᳫंश्चाहं द्वेष्मि, येच मां, स्वाहा ॥ जातवेदसे अग्नये इदं नमम ॥ योअस्मभ्यं, अरातीयात्, यश्चनः, द्वेषते जनः । निन्दाद्यः, अस्मान् दिप्साच्च, सर्वाᳫंस्तान्, मᳫंमषाकुरु, स्वाहा ॥ अग्नये इदं नमम ॥ सᳫंशितं मे, ब्रह्म, सᳫंशितं, वीर्यं, बलम् । सᳫंशितं, क्षत्रं मे, जिष्णु, यस्याहमस्मि, पुरोहितः, स्वाहा ॥ अग्नये इदं नमम ॥ उदेषां, बाहू अतिरं, उद्वर्चः, अथो बलम् । क्षिणोमि, ब्रह्मणा, अमित्रान्, उन्नयामि, स्वा(२)म्

अहम्, स्वाहा ॥ अग्नये इदं नमम ॥ पुनर्मनः, पुनरायुर्मे, आगात्, पुनश्चक्षुः, पुनः, श्रोत्रंमे, आगात्, पुनः प्राणः, पुनः, आकूतंमे, आगात्, पुनश्चित्तं, पुनः, आधीतंमे, आगात् ॥ वैश्वानरः, मेऽदब्धः, तनूपाः, अवबाधतां, दुरितानि, विश्वा स्वाहा ॥ वैश्वानराय अदब्धाय तनूपे इदं न मम* ॥

---

* இத்துடன் ச்ருதியில் சொன்ன ப்ரதான ஹோமம் முடிந்ததால் இங்கு அதைச்சேர்ந்த ஸ்விஷ்டகிருச்சரு ஹோமம் செய்ய வேண்டும். போதாயனமதப்படி இன்னும் எட்டு ஹோமங்கள்1 செய்வதால் அதர்க்குப் பிறகு ஸ்விஷ்டகிருச்சருஹோமம்2. இதர்க்குப்பிறகு ஜயாதிஹோமம்முதல் உபஸ்தானம் முடிய எல்லாம் மேலே எழுதப்பட்டுள்ளது. ஜயாதிஹோமம் செய்யாத பக்ஷத்தில் அதர்க்குமேல் உள்ள அவிக்ஞாதஹோமத்திலிருந்து எல்லாம் ஸமம். இதில் சிலர் ப்ரதான ஹோமமானதுமே உபஸ்தானத்தையும்3. செய்தபிறகு ஸ்விஷ்டகிருச்சருஹோமம் ஜயாதிஹோமம் முதலியதைச் செய்கிறார்கள். இத்துடன் வேறு சில வித்யாஸங்களையும் மூலக்ரந்த தாத்பர்ய ந்யாயங்களுடன் பரிசீலித்து இதில் அனுஷ்டிக்க வேண்டிய க்ரமப்படி ப்ரயோகம் எழுதியுள்ளது.

1. अथात्र बोधायनमतेन अष्टौ होमाः—"सिꣳहे व्याघ्रे उत या पृदाकौ । त्विषिरग्नौ, ब्राह्मणे, सूर्ये या । इन्द्रं या देवी

सुभगा, जजार्न । सान आगन्, वर्चसा, संविदाना स्वाहा ॥ त्विष्यै देव्यै इदं नमम ॥ या राजन्ये, दुन्दुभौ, आयतायाम् । अश्वस्य क्रन्द्ये, पुरुषस्य मायौ ॥ इन्द्रय्याँ देवी+विदाना स्वाहा ॥ त्विष्यै देव्यै इदं न मम ॥ या हस्तिनि, द्वीपिनि, या हिरण्ये । त्विषिरश्वेषु, पुरुषेषु गोषु । इन्द्रं+विदाना स्वाहा ॥ त्विष्यै देव्यै इदं न मम ॥ रथे अक्षेषु, वृषभस्य, वाजे । वाते पर्जन्ये, वरुणस्य, शुष्मे ॥ इन्द्रं+विदाना स्वाहा ॥ त्विष्यै देव्यै इदं न मम ॥ अग्नेऽभ्यावर्तिन्, अभिनः, आवर्तस्व, आयुषा वर्चसा, सन्या मेधया, प्रजया धनेन, स्वाहा ॥ अग्नये अभ्यावर्तिने इदं नमम ॥ अग्ने अङ्गिरः, शतन्ते सन्तु, आवृतः, सहस्रन्ते, उपावृतः । तासां पोषस्य, पोषेण, पुनर्नो नष्टं, आकृधि, पुनर्नो रयिं, आकृधि, स्वाहा ॥ अग्नये अभ्यावर्तिने इदं नमम ॥ पुनरूर्जा, निवर्तस्व, पुनरग्ने, इषाऽऽयुषा । पुनर्नः पाहि, विश्वतः, स्वाहा ॥ अग्नये अभ्यावर्तिने इदं न मम ॥ सह रय्या, निवर्तस्व, अग्ने पिन्वस्व, धारया ।

विश्वफिस्लया, विश्वतः, परि स्वाहा ॥ अग्नये अभ्यावर्तिने इदं नमम ॥

2. पूर्वं अन्तःपरिधिसादितं स्विष्टकृद्धविरादाय द्विरभिघार्य- "हव्यवाहं, अभिमातिषाहं, रक्षोहणं, पृतनासु, जिष्णुम् । ज्योतिष्मन्तं, दीद्यतं, पुरन्धि, अग्निं, स्विष्टकृतं, आहुवेमोम् ॥ स्विष्टमग्ने, अभि, तत्पृणाहि, विश्वादेव, पृतनाः, अभिष्य । उरुन्नः, पन्थां, प्रदिशन्, विभाहि, ज्योतिष्मद्धेहि, अजरन्नः, आयुस्स्वाहा ॥

(அக்நியின் வடகிழக்கில் ஹோமம் செய்யவேணும்)

अग्नये स्विष्टकृते इदं न मम ॥

3. उपस्थान मन्त्राः—वैश्वानराय, प्रति वेदयामः, यदीनृणं, सङ्गरः, देवतासु । स एतान्, पाशान्, प्रमुचन्, प्रवेद, स नो मुञ्चातु, दुरितात्, अवद्यात् ॥ वैश्वानरः, पवयान्नः, पवित्रैः, यत्सङ्गरं, अभि- धावाम्याशाम् । अनाजानन्, मनसा, याचमानः, यदत्रैनः, अव- तत्सुवामि ॥ अमी ये, सुभगे दिवि, विचृतौ, नाम तारके । प्रेहामृतस्य, यच्छतां, एतत्, बद्धकमोचनम् ॥ त्रिजिह्वार्ध्व, लोकान्प्रधि, बन्धा-

न्मुञ्चासि, बद्धकम् । योनेरिव, प्रच्युतो गर्भः, सर्वान्, पथो अनुष्व ॥ स प्रजानन्, प्रतिगृभ्णीत, विद्वान्, प्रजापतिः, प्रथमजाः, ऋतस्य । अस्माभिर्दत्तं, जरसः परस्तात्, अच्छिन्नं, तन्तुं, अनु सञ्चरेम ॥ ततन्तन्तुं, अन्वेके, अनुसञ्चरन्ति, येषां दत्तं, पित्र्यं, आयनवत् । अबन्ध्वेके, ददतः, प्रयच्छात्, दातुश्चेत्, शक्नवा॰सः, स्वर्ग एषाम् ॥ आरभेथां, अनुस॰रभेथां, समानं पन्थां, अवथो घृतेन । यद्वां पूर्तं, परिविष्टं, यदग्नौ तस्मै, गोत्रायेह, जायापती, स॰रभेथाम् ॥ यदन्तरिक्षं,पृथिवी मुत द्यां,यन्मातरंपितरं,वा जिहि॰सिम । अग्निर्मा, तस्मादेनसः, गार्हपत्यः, उन्नो नेषत्, दुरिता यानि, चकृम ॥ भूमिर्माता, अदितिर्नः, जनित्रं, भ्रातान्तरिक्षं, अभिशस्त एनः ॥ द्यौर्नः, पिता पितृयात्, शंभवासि, जामिमित्वा, माविवित्सि, लोकात् । यत्र सुहार्दः, सुकृतो मदन्ते, विहाय रोगं, तन्वा(१)॰स्वायाम् । अश्लोणाङ्गैः, अह्रुताः, स्वर्गे, तत्र पश्येम, पितरश्च पुत्रम् ॥ यदन्नमद्मि, अनृतेन देवाः,

दास्यन् ,अदास्यन् , उतवा, करिष्यन् । यद्देवानां, चक्षुषि, आगो अस्ति, यदेव किञ्च, प्रतिजग्राहं, अग्निर्मा तस्मात्, अनृणं, कृणोतु ॥ यदन्नमद्मि, बहुधा विरूपं, वासो हिरण्यं, उत गां, अजामविम् । यद्देवानां, चक्षुषि, आगो अस्ति, यदेव किञ्च, प्रतिजग्राहं, अग्निर्मा तस्मात् , अनृणं, कृणोतु ॥ यन्मया, मनसा वाचा, कृतमेनः, कदाचन । सर्वस्मात् , तस्मात् , मेळितः, मोग्धि, त्वꣳहि वेत्थ, यथा तथम् ॥

॥ श्रीः ॥

## ॥ कूश्माण्डहोममन्त्राः ॥

यद्देवा देवहेळनन्देवास श्चकृमा वयम् ।

आदित्या स्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित स्वाहा ॥ १

(देवेभ्य आदित्येभ्य इदं नमम)

देवा जीवनकाम्या यद्वाचाऽनृत मूदिम ।

तस्मान्न इह मुञ्चत विश्वे देवा स्सजोषस स्स्वाहा ॥ २

(विश्वेभ्यो देवेभ्य इदं नमम)

ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति ।

कृतान्नः पाह्येनसो यत्किञ्चानृत मूदिम स्वाहा ॥ ३

(द्यावापृथिवीभ्यां सरस्वत्या इदं नमम)

इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः ।

तेनो मुञ्चन्त्वेनसो यदन्यकृत मारिम स्वाहा ॥ ४

(इन्द्राग्निभ्यां मित्रावरुणाभ्यां सोमाय धात्रे बृहस्पतये इदं नमम)

सजातशंसादुत जामिशंसा-

ज्ज्यायस श्शंसादुतवा कनीयसः ।

अनाधृष्ट न्देवकृत य्यदेन स्तस्मा-

त्त्वमस्मा ज्जातवेदो मुमुग्धि स्वाहा ॥ ५

(अग्नये जातवेदसे इदं नमम)

यद्वाचा यन्मनसा बाहुभ्या मूरुभ्या-

मष्ठीवद्भ्याशिश्नै र्यदनृत श्चकृमा वयम् ।

अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु

चकृम यानि दुष्कृता स्वाहा ॥ ६

(अग्नये गार्हपत्याय इदं नमम)

येन त्रितो अर्णवा न्निर्बभूव

येन सूर्य न्तमसो निर्मुमोच ।

येनेन्द्रो विश्वा अजहा दराती स्तेनाह-

ज्ज्योतिषा ज्योतिरानशान आक्षि स्वाहा ॥ ७

(अग्नये ज्योतिषे इदं नमम)

यत्कुसीद मप्रतीत्त म्मयेह येन यमस्य निधिना चरामि ।

एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि स्वाहा ॥

(अग्नये इदं नमम)

यन्मयि माता गर्भे सत्येन श्चकार यत्पिता ।

अग्निर्मा तस्मा देनसो गार्हपत्यः प्रमुञ्चतु

दुरिता यानि चकृम करोतु मा मनेनसं स्वाहा ॥ ९

(अग्नये गार्हपत्याय इदं नमम)

यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो धयन् ।

अहिंसितौ पितरौ मया तत्तदग्ने अनृणो भवामि स्वाहा ॥ १०

(अग्नये इदं नमम)

यदन्तरिक्षं पृथिवी मुत द्या य्यँन्मातरं

पितरं व्वा जिहिंसिम ।

अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु

दुरिता यानि चकृम करोतु मा मनेनसं स्वाहा ॥ ११

(अग्नये गार्हपत्याय इदं नमम)

यदाशसा निशसा यत्पराशसा

यदेन श्चकृमा नूतन य्यत्पुराणम् ।

अग्निर्मा तस्मा देनसो गार्हपत्यः प्रमुञ्चतु

दुरिता यानि चकृम करोतु मा मनेनसꣳस्वाहा ॥ १२

(अग्नये गार्हपत्याय इदं नमम)

अतिक्रामामि दुरित य्यदेनो

जहामि रिप्रं परमे सधस्थे ।

यत्र यन्ति सुकृतो नापि दुष्कृत-

स्तमारोहामि सुकृता न्नु लोकꣳ स्वाहा ॥ १३

(अग्नये इदं न मम)

त्रिते देवा अमृजतैतदेन स्त्रित एत न्मनुष्येषु

मामृजे ततो मा यदि किञ्चिदानशे ।

अग्निर्मा तस्मा देनसो गार्हपत्यः प्रमुञ्चतु

दुरिता यानि चकृम करोतु मा मनेनसꣳ स्वाहा ॥ १४

(अग्नये गार्हपत्याय इदं नमम)

दिविजाता अफ्सु जाता या जाता ओषधीभ्यः ।

अथो या अग्निजा आप स्ता नश्शुन्धन्तु शुन्धनी स्स्वाहा ॥

(अद्भ्यः शुन्धनीभ्यः इदं नमम)

यदापो नक्तं न्दुरित श्चराम यद्वा दिवा नूतन यंत्पुराणम् ।

हिरण्यवर्णा स्तत उत्पुनीत न स्स्वाहा ॥ १६

(अद्भ्यो हिरण्यवर्णाभ्यः इदं नमम)

इमं मे वरुण श्रुधी हव मद्या च मृळय ।

त्वा मवस्यु राचके स्वाहा ॥ १७

(वरुणाय इदं नमम)

तत्त्वा यामि ब्रह्मणा वन्दमान-

स्तदाशास्ते यजमानो हविर्भिः ।

अहेळमानो वरुणेह बोध्युरुश१५स

मान आयुः प्रमोषी स्स्वाहा ॥ १८

(वरुणाय इदं नमम)

त्वन्नो अग्ने वरुणस्य विद्वा-

न्देवस्य हेळोऽव यासिसीष्ठाः ।

यजिष्ठो वह्नितम श्शोशुचानो विश्वा

द्वेषाꣳसि प्रमुमुग्ध्यस्म थ्स्वाहा ॥ १९

(अग्नये इदं न मम)

स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।

अवयक्ष्व नो वरुणꣳ रराणो वीहि मृळीकꣳ सुहवोन एधि स्वाहा ॥

(अग्नये इदं न मम)

त्वमग्ने अयास्ययास न्मनसा हितः ।

अयासन् हव्यमूहिषेऽयानो धेहि भेषजꣳ स्वाहा ॥ २१

(अग्नये अयसे इदं न मम)

यदर्दीव्य न्नृणमहं बभूवादित्सन्त्वा सञ्जगर जनेभ्यः ।

अग्निर्मा तस्मादिन्द्रश्च सव्विदानौ प्रमुञ्चताꣳ स्वाहा ॥ २२

(अग्नीन्द्राभ्यां इदं न मम)

यद्धस्ताभ्याञ्चकर किल्बिषाण्यक्षाणां वग्नु मुपजिघ्नमानः ।

उग्रंपश्याच राष्ट्रभृच्च तान्यप्सरसा वनुदत्ता मृणानि स्वाहा ॥

(उग्रंपश्यायै राष्ट्रभृते च अप्सरोभ्यां इदं न मम)

आयुष्टे विश्वतो दधदय मग्नि वरेण्यः ।
पुनस्ते प्राण आयाति परा यक्ष्मꣳ सुवामि ते स्वाहा ॥ ३५

(वरेण्याय अग्नये इदं न मम)

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनि रेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्र मभिरक्षतादिमꣳ स्वाहा ॥

(आयुर्दे अग्नये (हविषो जुषाणाय घृतप्रतीकाय घृतयोनये) इदं न मम)

इम मग्न आयुषे वर्चसे कृधि
तिग्म मोजो वरुण सꣳशिशाधि ।
मातेवास्मा अदिते शर्म यच्छ
विश्वे देवा जरदष्टि र्यथाऽस थ स्वाहा ॥ ३७

(अग्नये वरुणाय अदितये विश्वेभ्यो देवेभ्यः इदं न मम)

अग्न आयूꣳषि पवस आसुवोर्ज मिषं च नः ।
आरे बाधस्व दुच्छुनाꣳ स्वाहा ॥ ३८

(अग्नये इदं न मम)

अग्ने पवॅस्व स्वपॉ अस्मे वर्चॅ स्सुवीर्यम् ।
दधॅ द्रयिं मयि पोषꣳ स्वाहा ॥ ३९

(अग्नये स्वपसे इदं न मम)

अग्निर् ऋषिः पवॅमानः पाञ्चजन्यः पुरोहितः ।
त मीमहे महागयꣳ स्वाहा ॥ ४०

(अग्नये (ऋषये पवमानाय पाञ्चजन्याय पुरोहिताय महागयाय) इदं न मम)

अग्ने जाता न्प्रणुॅदान स्सपत्ना न्प्रत्यजॉता ञ्जातवेदो नुदस्व ।
अस्मे दीॅदिहि सुमना अहेळ ञ्छर्मन्ते स्याम त्रिवरूॅथ उद्भौ स्वाहा॥

(अग्नये जातवेदसे इदं न मम)

सहॅसा जाता न्प्रणुॅदान स्सपत्ना न्प्रत्यजॉता ञ्जातवेदो नुदस्व ।
अधिनॉ ब्रूहि सुमनस्यमॉनो वयꣳस्याॅम प्रणुॅदानस्सपत्नान्थ्स्वाहा ॥

(अग्नये जातवेदसे (सुमनस्यमानाय) इदं न मम)

अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति ।
ताꣳस्त्व ञ्वृॅत्रह ञ्जहि वस्वस्मभ्य मार्भर स्वाहा ॥ ४३

(अग्नये वृत्रघ्ने इदं न मम)

अग्ने यो नोऽभिदासति समाना यश्च निष्ट्यः ।
त ँव्वय ँ समिधं ङ्कृत्वा तुभ्य मग्नेऽपि दध्मसि स्वाहा ॥ ४४

(अग्नये इदं न मम)

यो न श्शपा दशपतो यश्च न श्शपत श्शपात् ।
उषाश्च तस्मै निम्रुक्च सर्व ँ पाप ँ समूहता ँ स्वाहा ॥ ४५

(उषोनिम्रुग्भ्यां इदं न मम)

यो न स्सपत्नो यो रणो मर्तोऽभिदासति देवाः ।
इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन स्वाहा ॥ ४६

(देवेभ्यः इदं न मम)

यो मा न्द्वेष्टि जातवेदो यश्चाह न्द्वेष्मि यश्च माम् ।
सर्वा ँस्तानग्ने सन्दह या ँश्चाह न्द्वेष्मि येच मा ँस्वाहा ॥ ४७

(जातवेदसे अग्नये इदं न मम)

यो अस्मभ्य मरातीया द्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मा न्दिफ्साच्च सर्वा ँस्ता न्मष्मषा कुरु स्वाहा ॥

(अग्नये इदं न मम)

सꣳशितं मे ब्रह्म सꣳशितं वीर्यं (१ म् बलम् ।

सꣳशितं क्षत्रं मे जिष्णु यस्याह मस्मि पुरोहित स्स्वाहा ॥ ४९

(अग्नये इदं न मम)

उदेषां बाहू अतिर मुद्वर्चो अथो बलम् ।

क्षिणोमि ब्रह्मणाऽमित्रा नुन्नयामि स्वा(२)म् अहꣳस्वाहा ॥ ५०

(अग्नये इदं न मम)

पुनर्मनः पुनरायुर्म आगा त्पुनश्चक्षुः पुनश्श्रोत्रम आगात्पुनः

प्राणः पुनराकूतं म आगा त्पुनश्चित्तं पुनराधीतं म आगात् ।

वैश्वानरो मेऽदब्ध स्तनूपा अवबाधता न्दुरितानि विश्वा स्वाहा ॥

(वैश्वानराय अदब्धाय तनूपे इदं न मम)

॥ अथात्र बोधायनमतानुसारेणाष्टौ होममन्त्राः ॥

सिꣳहे व्याघ्र उत या पृदाकौ ।

त्विषि रग्नौ ब्राह्मणे सूर्ये या ।

इन्द्र यँ्या देवी सुभगॉ जजानॅ ।

सा न आग न्वर्चॅसा सँव्विदाना स्वाहा ॥ १

(त्विष्यै देव्यै इदं न मम)

या रॉजन्ये दुन्दुभा वायॅतायाम् ।

अश्वॅस्य क्रन्द्ये पुरुॅषस्य मायौ ।

इन्द्र यँ्या देवी सुभगॉ जजानॅ ।

सा न आग न्वर्चॅसा सँव्विदाना स्वाहा ॥ २

(त्विष्यै देव्यै इदं न मम)

या हस्तिनि द्वीपिनि या हिरॅण्ये ।

त्विषि रश्वॅषु पुरुॅषेषु गोषु ।

इन्द्र यँ्या देवी सुभगॉ जजानॅ ।

सा न आग न्वर्चॅसा सँव्विदाना स्वाहा ॥ ३

(त्विष्यै देव्यै इदं न मम)

रथे अक्षेषु वृषभस्य वाजे ।

वाते पर्जन्ये वरुणस्य शुष्मे ।

इन्द्र यँया देवी सुभगा जजान ।

सा न आग न्वर्चसा सँविदाना स्वाहा ॥ ४

(त्विष्यै देव्यै इदं न मम)

अग्नेऽभ्यावर्ति न्नभि न आवर्तस्वायुषा

वर्चसा सन्या मेधया प्रजया धनेन स्वाहा ॥ ५

(अग्नये अभ्यावर्तिने इदं न मम)

अग्ने अङ्गिर श्शत न्ते सन्त्वा-

वृत स्सहस्र न्त उपावृतः ।

तासां पोषस्य पोषेण पुन र्नो

नष्ट माकृधि पुन र्नो रयि माकृधि स्वाहा ॥ ६

(अग्नये अभ्यावर्तिने इदं न मम)

पुनॅरूर्जा निर्वर्तस्व पुनॅरग्न इषाऽऽयुँषा ।

पुनॅर्नः पाहि विश्वत स्स्वाहा ॥ ७

(अग्नये अभ्यावर्तिने इदं न मम)

सह रय्या निवर्तस्वा ग्ने पिन्वॅस्व धारॅया ।

विश्वफ्स्नॅिया विश्वत स्परि स्वाहा ॥ ८

(अग्नये अभ्यावर्तिने इदं न मम)

॥ स्विष्टकृच्चरुहोमः ॥

पूर्वं अन्तःपरिधिसादितं स्विष्टकृद्धविरादाय द्विरभिघार्य- "हव्यवाॅहं मभिमातिषाहँ रक्षोहणं पृतॅनासु जिष्णुम् । ज्योॅतिष्मन्त न्दीद्यॅतं पुरॅन्धि मग्निँ स्विष्टकृत माॅहुवेमोम् ॥ स्विष्टमग्ने अभि तत्पृॅणाहि विश्वॅा देव पृतॅना अभिष्य । उरुन्नः पन्थां प्रदिश न्विभॉहि ज्योॅतिष्म द्धेह्यजॅर न्न आयु स्स्वाहा ॥

(அக்நியின் வடகிழக்கில் ஹோமம் செய்யவேணும்)

(अग्नये स्विष्टकृते इदं न मम)

## ॥ जयादि होम मन्त्राः ॥

एतत्कर्मसमृद्ध्यर्थं जयादिहोमं करिष्ये —चित्तञ्च स्वाहा । चित्तायेदं न मम॥ चित्तिश्च स्वाहा। चित्या इदं न मम ॥ आकूतञ्च स्वाहा। आकूतायेदं न मम ॥ आकूतिश्च स्वाहा । आकूत्या इदं न मम ॥ विज्ञातञ्च स्वाहा । विज्ञातायेदं न मम ॥ विज्ञानञ्च स्वाहा । विज्ञानायेदं न मम ॥ मनश्च स्वाहा । मनस इदं न मम ॥ शक्करीश्च स्वाहा । शक्करीभ्य-इदं न मम ॥ दर्शश्च स्वाहा । दर्शायेदं न मम ॥ पूर्णमासश्च स्वाहा । पूर्णमासायेदं न मम ॥ बृहच्च स्वाहा । बृहत इदं न मम ॥ रथन्तरञ्च स्वाहा । रथन्तरायेदं नमम ॥ प्रजापतिः-जयान्-इन्द्राय-वृष्णे-प्रायच्छत्-उग्रः-पृतनाज्येषु-तस्मै विशः-समनमन्त-सर्वाः-सउग्रः-सहि हव्यः-बभूव स्वाहा । प्रजापतय इदं न मम ॥ अग्निर्भूतानां-अधिपतिः-समावतु-अस्मिन ब्रह्मन्-अस्मिन् क्षत्रे-अस्यामाशिषि-अस्यां-पुरोधायां-अस्मिन् कर्मन्-अस्यां-देवहूत्यां-स्वाहा । अग्नय इदं न मम ॥ इन्द्रो-ज्येष्ठानां-अधिपतिः-समावतु-अस्मिन्ब्रह्मन्-अस्मिन्क्षत्रे-अस्यामा-

शिषि अस्यांपुरोधायां-अस्मिन् कर्मन्न्-अस्यां देवहूत्यां-स्वाहा ॥ इन्द्राये॑दं न मम ॥ यमःपृथिव्याः-अधिपतिः समावतु-अस्मिन्ब्रह्मन्न्-अस्मिन् क्षत्रे-अस्यामाशिषि-अस्यांपुरोधायां - अस्मिन् कर्मन्न्-अस्यां देवहूत्यां-स्वाहा । यमायेदं न मम ॥ वायुरन्तरिक्षस्य-अधिपतिः-समावतु - अस्मिन् ब्रह्मन्न् - अस्मिन्क्षत्रे - अस्यामाशिषि - अस्यां पुरोधायां-अस्मिन्कर्मन्न्-अस्यां देवहूत्यां-स्वाहा । वायव इदं न मम ॥ सूर्यो दिवः-अधिपतिः - समावतु - अस्मिन् ब्रह्मन्न् - अस्मिन् क्षत्रे-अस्यामाशिषि - अस्यां पुरोधायां - अस्मिन्कर्मन्न् - अस्यां देवहूत्यां-स्वाहा ॥ सूर्यायेदं न मम ॥ चन्द्रमा नक्षत्राणां - अधिपतिः - समावतु - अस्मिन् ब्रह्मन्न् - अस्मिन् क्षत्रे - अस्यामाशिषि - अस्यां पुरोधायां-अस्मिन् कर्मन्न् अस्यां-देवहूत्यां-स्वाहा । चन्द्रमस इदं न मम ॥ बृहस्पतिः - ब्रह्मणः - अधिपतिः - समावतु - अस्मिन् ब्रह्मन्न्-अस्मिन् क्षत्रे-अस्यामाशिषि-अस्यांपुरोधायां-अस्मिन्कर्मन्न् - अस्यां देवहूत्यां-

स्वाहा । बृहस्पतय इदं न मम ॥ मित्रस्सत्यानां-अधिपतिः-सम्मावतु - अस्मिन् ब्रह्मन् - अस्मिन् क्षत्रे-अस्यामाशिषि-अस्यांपुरोधायां - अस्मिन् कर्मन् - अस्यां देवहूत्यां - स्वाहा । मित्रायेदं न मम ॥ वरुणोनां-अधिपतिः-सम्मावतु-अस्मिन् ब्रह्मन् - अस्मिन् क्षत्रे - अस्यामाशिषि अस्यां पुरोधायां - अस्मिन् कर्मन् - अस्यां देवहूत्यां-स्वाहा । वरुणायेदं न मम ॥ समुद्रः - स्रोत्यानां - अधिपतिः-सम्मावतु-अस्मिन् ब्रह्मन् - अस्मिन्क्षत्रे-अस्यामाशिषि-अस्यांपुरोधायां-अस्मिन्कर्मन् - अस्यां देवहूत्यां-स्वाहा । समुद्रायेदं न मम ॥ अन्नं-साम्राज्यानां-अधिपतितन्मावतु-अस्मिन् ब्रह्मन्-अस्मिन्क्षत्रे - अस्यामाशिषि-अस्यांपुरोधायां-अस्मिन् कर्मन् - अस्यांदेवहूत्यां - स्वाहा । अन्नायेदं न मम ॥ सोम ओषधीनां - अधिपतिः - सम्मावतु - अस्मिन् ब्रह्मन् - अस्मिन् क्षत्रे - अस्यामाशिषि-अस्यांपुरोधायां-अस्मिन्कर्मन् - अस्यां देवहूत्यां-स्वाहा ॥ सोमायेदं न मम ॥ सविता प्रसवानां-अधिपतिः-सम्मावतु-

अस्मिन् ब्रह्मन्॑ - अस्मिन् क्षत्रे - अस्यामाशिषि - अस्यां पुरोधयां-
अस्मिन्कर्मन्॑ - अस्यां देवहूत्यां - स्वाहा । सवित्र इदं न मम ॥
रुद्रःपशूनां-अधिपतिः-समावतु - अस्मिन् ब्रह्मन्॑ - अस्मिन् क्षत्रे-
अस्यामाशिषि-अस्यां पुरोधायां अस्मिन् कर्मन्॑ अस्यां देवहूत्यां स्वाहा ।
रुद्रायेदं न मम ॥ अपउपस्पृश्य, त्वष्टा रूपाणां-अधिपतिः-समावतु-
अस्मिन्ब्रह्मन्॑ - अस्मिन्क्षत्रे - अस्यामाशिषि - अस्यां पुरोधायां - अस्मिन्
कर्मन्॑ - अस्यां देवहूत्यां-स्वाहा । त्वष्ट्र इदं न मम ॥ विष्णुः पर्वतानां-
अधिपतिः-समावतु-अस्मिन्ब्रह्मन्॑ अस्मिन्क्षत्रे-अस्यामाशिषि-अस्यांपुरो-
धायां - अस्मिन्कर्मन्॑ - अस्यां देवहूत्यां - स्वाहा । विष्णव इद-
न मम ॥ मरुतो गणानां - अधिपतयः - ते माऽवन्तु - अस्मिन्-
ब्रह्मन्॑ - अस्मिन्क्षत्रे-अस्यामाशिषि - अस्यांपुरोधायां - अस्मिन् कर्मन्-
अस्यां-देवहूत्यां-स्वाहा । मरुद्भ्य इदं न मम ॥ पितरः - पिता-
महाः - परवरे - तताः - ततामहाः - इहमाऽवत । अस्मिन् ब्रह्मन्॑

अस्मिन् क्षत्रे - अस्यामाशिषि - अस्यांपुरोधायां - अस्मिन् कर्मन् - अस्यां देवहूत्यां-स्वाहा । मन्त्रोक्तदेवताभ्यः इदं न मम ॥

अपउपस्पृश्य, ऋताषाट् - ऋतधामा - अग्निर्गन्धर्वः - तस्यौषधयः - अप्सरसः-ऊर्जो नाम-स इदं ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रं पान्तु तस्मै स्वाहा । अग्नये गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । ओषधीभ्यः अप्सरोभ्यः इदं न मम ॥ सꣳहितः-विश्वसामा - सूर्यो गन्धर्वः-तस्य मरीचयः-अप्सरसः-आयुवो नाम-स इदं-ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रं पान्तु-तस्मै स्वाहा । सूर्याय गन्धर्वायेदं न मम ॥ ताभ्यस्स्वाहा । मरीचिभ्यः अप्सरोभ्यः इदं न मम ॥ सुषुम्नः-सूर्य-रश्मिः - चन्द्रमागन्धर्वः - तस्यनक्षत्राणि - अप्सरसः - बेकुरयोनाम-स इदं ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रं पान्तु तस्मै-स्वाहा । चन्द्रमसे गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । नक्षत्रेभ्यः अप्सरोभ्यः इदं न मम ॥ भुज्युस्सुपर्णः-यज्ञोगन्धर्वः-तस्य दक्षिणाः-अप्सरसः-

स्तवा नाम-स इदं ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रं पान्तु-तस्मै स्वाहा। यज्ञाय गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा। दक्षिणाभ्यःअफ्सरोभ्यः इदं न मम ॥ प्रजापतिः-विश्वकर्मा-मनो गन्धर्वः-तस्य-ऋख्सामानि-अफ्सरसः-वह्नयो नाम-स इदं ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रंपान्तु-तस्मै स्वाहा। मनसे गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा। ऋख्सा-मेभ्यः अफ्सरोभ्यः इदं न मम ॥ इषिरः - विश्वव्यचाः - वाता गन्धर्वः - तस्यापः - अफ्सरसः - मुदा नाम- स इदं ब्रह्म-क्षत्रंपातु-ता इदं ब्रह्म - क्षत्रं पान्तु-तस्मै स्वाहा । वाताय गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । अद्भ्यः अफ्सरोभ्यः इदं न मम ॥ भुवनस्य पते - यस्य ते - उपरि गृहाः-इह च । स नो रास्व-अज्यानिं - रायस्पोषं - सुवीर्यं - संवथ्सरीणां - स्वस्तिं स्वाहा । भुवनस्य पत्ये इदं न मम ॥ परमेष्ठी - अधिपतिः - मृत्युर्गन्धर्वः-तस्य विश्वं - अफ्सरसः - भुवो नाम - स इदं ब्रह्म - क्षत्रं पातु-

ता इदं ब्रह्म - क्षत्रं पान्तु - तस्मै स्वाहा । मृत्यवे गन्धर्वायेदं न मम ॥ ताभ्यस्स्वाहा । विश्वस्मै अप्सरोभ्यः इदं न मम ॥

सुक्षितिः-सुभूतिः-भद्रकृत् - सुवर्वान् - पर्जन्यो गन्धर्वः-तस्य विद्युतः-अप्सरसः-रुचोनाम- स इदंब्रह्म - क्षत्रं पातु - ता इदं ब्रह्म - क्षत्रं पान्तु - तस्मै स्वाहा । पर्जन्याय गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । विद्युद्भ्यः अप्सरोभ्यः इदं न मम ॥

दूरेहेति -अमृडयः - मृत्युर्गन्धर्वः - तस्य प्रजाः-अप्सरसः - भीरुवो-नाम- स इदं ब्रह्म-क्षत्रं पातु-ता इदं ब्रह्म-क्षत्रं पान्तु-तस्मैस्वाहा । मृत्यवे गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । प्रजाभ्यः अप्सरोभ्यः इदं न मम ॥ चारुः - कृपणकाशी - कामोगन्धर्वः - तस्याधयः - अप्सरसः-शोचयन्तीः - नाम - स इदं ब्रह्म - क्षत्रं पातु - ता इदं ब्रह्म-क्षत्रं पान्तु - तस्मैस्वाहा । कामाय गन्धर्वायेदं न मम ॥ ताभ्य स्स्वाहा । आधिभ्यः अप्सरोभ्यः इदं न मम ॥ स नः-

भुवनस्यपते-यस्य ते-उपरि गृहाः - इह च । उरु ब्रह्मणेऽस्मै-क्षत्राय-महि शर्म यच्छ-स्वाहा । भुवनस्य पतये इदं न मम ॥ प्रजापते-नत्वंत्-एतानि - अन्यः-विश्वा जातानि-परि ता बभूव । यत्कामास्ते - जुहुमः-तन्नोअस्तु - वयꣳस्याम - पतयः - रयीणाम् - स्वाहा । प्रजापतये इदं न मम ॥ भूस्स्वाहा । अग्नय इदं न मम ॥ भुवस्स्वाहा । वायव इदं न मम । सुव स्स्वाहा । सूर्यायेदं न मम ॥ ओंभूर्भुव-स्सुवस्स्वाहा । प्रजापतये इदं न मम ॥ यदस्यकर्मणः-अत्यरीरिचं-यद्वान्यूनं-इहाकरम् । अग्निष्टत्-स्विष्टकृत्-विद्वान्-सर्वꣳस्विष्टं-सुहुतङ्क-रोतु - स्वाहा । अग्नये स्विष्टकृते इदं न मम ॥ अथ परिधान-क्रमेण परिधीन् अनक्ति ।[1]

---

1. चरुपक्षे लेपकार्यम् । प्रधानं दक्षिणतः इतरन्मध्ये आज्यस्थालीमुत्तरतः (निधाय) पात्रप्रयुक्त (तृणस्य) बर्हिषोऽग्रं प्रधान-दर्व्यां मध्यं इतरदर्व्यां मूलं आज्यस्थाल्यां अनक्ति । एवंत्रिः । एकदर्भमङ्के निधाय तृणं प्रहृत्य अङ्कस्थदर्भञ्च प्रहरेत् । निर्देशनञ्च अग्नेरभिमन्त्रणञ्च (कृत्वा) भूमौ निमार्ष्टि ।

मध्यमं परिधिमग्नौ प्रहृत्य इतरौ युगपत् प्रहरन् उत्तरार्ध्यस्याग्रं अङ्गारेषूपोहति ॥ दर्वीभ्यामाज्यं गृहीत्वा सँस्रावं जुहोति-स्वाहा । वसुभ्यो रुद्रेभ्य आदित्येभ्यः सँस्रावभागेभ्यः इदं न मम ॥ अस्मिन् कर्मणि अविज्ञातप्रायश्चित्तानि करिष्ये - अनाज्ञातं यदाज्ञातं - यज्ञस्य-क्रियते मिथु । अग्ने-तदस्यकल्पय-त्वँहि वेत्थ - यथातथं - स्वाहा । अग्नय इदं न मम ॥ पुरुषसंमितः-यज्ञोयज्ञः-पुरुषसंमितः । अग्ने-तदस्य कल्पय- त्वँहि वेत्थ-यथातथं-स्वाहा । अग्नय इदं न मम ॥ यत्पाकत्राः-मनसा दीनदक्षा न । यज्ञस्य - मन्वते - मर्तास । अग्निष्टत् - होता-क्रतुवित् - विजानन् - यजिष्ठो देवान् - ऋतुशः-यजाति - स्वाहा । अग्नय इदं न मम ॥ (त्वन्नोअग्ने-वरुणस्य विद्वान् - देवस्य हेडः-अवयासिसीष्ठाः । यजिष्ठः - वह्निनमः - शोशुचानः-विश्वा द्वेषाँसि-प्रमुमुग्धि - अस्मत् - स्वाहा । अग्नये इदं न मम ॥ सत्वन्नोअग्ने-अत्रमो भवोती - नेदिष्ठः - अस्या उषसः - व्युष्टौ । अवयक्ष्व नः-वरुणं-रराणः वीहि मृडीकं - सुहवो नः - एधि स्वाहा ।

अग्नये इदं न मम ॥ यत्त इन्द्र-भयामहे-ततोनः-अभयङ्कृधि । मघवन् - शग्धि - तवतन्नः - ऊतये - विद्विषः-विमृधोजहि - स्वाहा । इन्द्राय मघवते इदं न मम ॥ स्वस्तिदाः - विशस्पतिः-वृत्रहा-विमृधो वशी । वृषेन्द्रः-पुरएतुनः-स्वस्तिदाः-अभयङ्करः-स्वाहा । इन्द्राय अभयङ्करायेदं न मम ॥ आभिर्गीर्भिः-यदतोनः-ऊनं-आप्यायय-हरिवः - वर्धमानः । यदास्तोतृभ्यः - महिगोत्रा - रुजासि-भूयिष्ठभाजः-अध ते स्याम - स्वाहा । इन्द्राय हरिवते इदं नमम ॥ त्र्यम्बकं-यजामहे-सुगन्धिं-पुष्टिवर्धनम् । उर्वारुकमिव-बन्धनात् - मृत्योर्मुक्षीय-माऽमृतात्-स्वाहा । त्र्यंबकायेदं न मम ॥ इदं विष्णुः-विचक्रमे-त्रेधा-निदधे पदम् । समूढमस्य-पांसुरे-स्वाहा । विष्णव इदं न मम ॥) भूस्स्वाहा । अग्नय इदं न मम ॥ भुवस्स्वाहा । वायव इदं न मम ॥ सुवस्स्वाहा । सूर्यायेदं न मम ॥ ओंभूर्भुवस्सुवस्स्वाहा । प्रजापतय इदं न मम ॥ अस्मिन् कर्मणि मध्ये संभावितसमस्तदोषनिर्हरणार्थं सर्वप्रायश्चित्तं होष्यामि—

यदन्न मद्मि बहुधा विरूप ङ्वासो हिरण्य मुत गा मजा मविम् ।
यद्देवाना श्चक्षुष्यागो अस्ति यदेव
किञ्च प्रतिजग्राह मग्नि र्मा तस्मादनृण ङ्कृणोतु ॥ १२
यन्मया मनसा वाचा कृतमेनः कदाचन ।
सर्वस्मा त्तस्मा न्मेळितो मोग्धि त्वꣳहि वेत्थ यथा तथम् ॥ १३

इत्यनुवाकेन उपस्थाय-अग्नये नमः, मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन । यद्धुतन्तु मया देव परिपूर्णं तदस्तु ते ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषा मशेषाणां कृष्णानुस्मरणं परम् ॥ इति वदन् नमस्कृत्य अभिवाद्य, अनुष्ठित कर्मसादुगुण्यार्थं यत्किञ्चित् हिरण्यदानं करिष्ये- 'हिरण्यगर्भगर्भस्थ हेम बीजं विभावसोः । अनन्त पुण्य फलदं अतश्शान्ति प्रयच्छ मे ॥' इदमाग्नेयं हिरण्यं अद्यानुष्ठितकर्मसादुगुण्यं कामयमानः ब्राह्मणेभ्यः संप्रददे न मम इति हिरण्यं ब्राह्मणेभ्यो दत्वा तेभ्यः आशिषो गृहीत्वा पवित्रं विसृज्य आचामेत् । शक्तश्चेत् तदैव बहून् ब्राह्मणान् भोजयेत् ॥

॥ इति कूश्माण्डहोमप्रयोगः ॥

॥ शुभमस्तु ॥

---

Printed at the M. L. J. Press Private Ltd., Madras-4.

## शोधनपत्रिका

| पुटे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| १ | ११ | न्यो | ज्यो |
| २ | १२ | न्तं | न्त |
| ६ | १२ | सांहिती | (देवतीर्थेन) सांहिती |
| ६ | १३ | विश्वान् | (ऋषितीर्थेन) विश्वान् |
| ७ | १ | आग्नः | अग्निः |
| ७ | ५ | प्रप्रि | प्रपि |
| ७ | १९ | गृज्य | मृज्य |
| ८ | ९ | वितं | वीतं |
| १०,४४ | १९,२४ | स्पर्श्य | स्पृश्य |
| १२ | ७ | -स्वा | स्स्वा |
| १५ | १०,१३ | अग्नी—मिदं | अग्नये इदं |
| १५ | १६ | विभृ | विमृ |
| १७ | ३ | म्नय | म्नाय |
| १८ | १२ | मम | न मम |
| १९ | ३ | न्ते न | न्ते - न |
| २० | ७ | निरऋृत्यां | नैरऋृत्यां |
| २० | १० | -प्र | प्र |
| २० | ११,१२,१३,१४ | + | , |
| २० | १५ | मंस्थाः | मऽस्थाः |
| २२ | १४ | निर्विघ्नं | अविघ्नं |
| २३ | ८ | बिभा | विभा |
| २४,३२ | १७,१ | हुती | हुति |
| २५ | १८ | — | (प्रीयतां भगवान् प्रजापतिः इति प्रतिवचनम्) |

| पुटे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| २४ | २४ | ङ्क | ङ्कु |
| २६ | १२,१३ | पतये | पत्ये |
| २७ | १ | पामि, (न) | यामि, (न |
| २७,३३ | ५,१ | अकार् | अकारि |
| २७ | १० | ण्यव्र | ण्यव |
| २८ | १० | सगन् | सागन् |
| २९ | १ | स्मु | स्सु |
| २९ | १० | वि, ष्टै | वि, ष्टै |
| २९ | ११ | न्ये | व्ये |
| ३० | ३ | बै | वै |
| ३१ | ३ | प्रन | पुन |
| ३१ | ५ | ध | न्ध |
| ३३ | ८ | + | |
| ३४ | २ | विम | विम |
| ३६ | १२ | न् त्स | न्थ्स |
| ३८ | १० | नुरा | नरा |
| ३९ | ६ | णी | र्णं |
| ४१ | १५ | त्वास | त्वासि |
| ४३ | ११ | ह्री | ह्वी |
| ४३ | १२ | ग्र, भ्पु | ग्र, भ्यु |
| ४५ | १५ | यज | जुहो |
| ४७ | ४ | ण | णा |
| ४९ | ४ | तू | त् |
| ५४ | ४ | बेनि | बोनि |

| पुटे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| ३ | ७ | ऊर्जे | ऊर्जे |
| ४ | १ | यजू, माप | यजू, माप |
| ८ | १९ | मित्रं देवं | मित्र न्देवं |
| १२ | ४ | यजि | यज्ञि |
| ,, | १२ | तॅ | तॆ |
| १३ | १४ | यॅश्च | चॅ श्च |
| १५ | ७ | तथ | तथ |
| ,, | १० | विश्वा | विश्वा |
| ,, | १३ | ततो नॅः | ततो नः |
| १६ | १ | गीं | गीं |
| ,, | ६ | विष्णुँः | विष्णुः |
| १७ | १० | सप्त | सप्त |
| ,, | १३ | स उ | स उ |
| १९ | १६ | त्रिष्टु | त्रिष्टु |
| २० | ९ | चत्वारि श्टृङ्गाः | चत्वारि श्टृङ्गा |
| २२ | १ | गॅौं | गॅौं |

| पुटे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| २२ | २ | यंत् | यांत् |
| ,, | १६ | गणा | गणा |
| २६ | १७ | श्वामि | श्वामि |
| २७ | १३ | पश्श | पश्श |
| ,, | १४ | रिक्षे | रिक्षे |
| २८ | १ | भर्व | भॅब |
| ,, | ४ | दान | दान |
| ,, | ० | मद्रा | मद्रा |
| २९ | २ | जनाः | जनाः |
| ,, | ४ | य तॅ | यत्ते |
| ,, | ७ | वह्नी | बह्नी |
| ,, | ८ | भिर्मा | भिर्मा |
| ,, | १२ | नीर | नीर |
| ,, | १४ | ऋषिभि | ऋषिभि |
| ३० | १ | धा, पॅयस्ब | घा, पयॅस्व |
| ,, | २ | प्व | ण्त्र |
| ,, | ४ | धा, ॠषिभि | घा, ऋषिभि |

| पृष्ठे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| ३० | ५ | न स॒॑ | न॑ स॒ |
| ,, | ६ | पवि॒ | प॒वि |
| ,, | १० | गातु॒ | गा॒तु |
| ,, | ११ | ज्ञ॑प, मा॑नु | ज्ञप॑, मा॑नु॑ |
| ३१ | १३ | यन्तु | य॒न्तु |
| ३२ | १ | भु॒व | भुव॒ |
| ,, | ३ | स्स॑र्व | स्सर्व॑ |
| ३४ | १३ | अ॑भि, निद | अभि॑, निद॑ |
| ३५ | ५ | स्ते॒ | स्स्ते॒ |
| ३६ | ४ | बु॒ | वु॒ |
| ,, | ९ | द्दे॑ | द्दे॑ |
| ३७ | १३ | क्तू॑ | क्तू॑ |
| ४२ | ४ | वीं॑ | वी॑ |
| ४७ | ५ | उत | उ॒त |
| ४८ | १ | एतत् | ए॒तत् |
| ,, | २ | इ॒दं॒ | इदं |
| ५० | १३ | यमस्य॑ | य॒मस्य॑ |

| पुटे | पङ्क्तौ | असाधु | साधु |
|---|---|---|---|
| ५३ | ९ | मॅ | मॅ॑ |
| ,, | ११ | मानॅः | मॅानः |
| ५४ | १ | स॒मा॒नः | स॒मानः |
| ,, | ४ | सर्वं | सर्वॅं |
| ५८ | ८ | सि॒म॒ | सि॒म |
| ,, | १२ | सुहा | सु॒हा |
| ५९ | २ | देव | दे॒व |
| ६६ | ५ | हळॅो | हेळॅो |
| ,, | ९ | ॅिव्वमॅ | ॅिव्वमॅ |
| ६९ | ८ | मॅन्ते | मॅ॑न्ते |
| ७० | १ | समा॒ना | समा॒नो |
| ७३ | ७ | वर्चॅ | वर्चॅ॑ |
| ७८ | ७ | वॅं | वॅं॑ |
| ७९ | ३ | ऋ॒त॒ | ऋ॒त |
| ८० | ६ | वातॅा | वातॅो |
| ८५ | ३ | जि॒ह्वाः | जि॒ह्वाः |